# द्वितीयः परिशिष्टभागः

## ब्राह्मीलिपिलिखितलेखार्थज्ञानस्य इतिवृत्तम्

फीरोजशाह तुगलकादेशाद् अशोकस्य तोपरास्थितः लेखस्तम्भः दिल्लीम् आनीयत। अस्य लेखस्य अर्थं जिज्ञासुं कृतेऽपि यथासम्भवं सर्वोपायेषु फीरोजशाहस्य मनोरथसिद्धिः नाभूत। १७८४ मिते खीष्टाब्दे सर्वप्रथमं चार्लस-विल्किन्स (Charles Wilkins) १७८० तमे खीष्टाब्दे लेखितं नारायणपालाभिधस्य वङ्गनृपस्य च, १३०० तमे खीष्टाब्दे राधाकान्तशर्मणा लिखितं चौहानवंश्यनृपविशेषस्य च लेखम् अर्थतः पठितवान्। १३०० मिते एव वर्षे जे. ऐच. हैरिङ्गटनः (J. H. Herrington) नागार्जुन-बाराबरगुहासु उत्कीर्णं गुप्तवंशसमयान्वयिनं मौखरिनृपेण अनन्तवर्मणा रचितं लेखम् अधीतवान्। अनेन गुप्तवंशनृपप्रयुक्ताया वर्णमालाया अर्द्धम् अधिगतार्थम् अभवत ॥

१८१८ मितात् कालाद् आरभ्य १८२३ मितकालपर्यन्तं लोकविश्रुतस्य स्व राजस्थानेतिहासग्रन्थस्य सामग्रीं सञ्चिन्वन् कर्नलटाडमहोदय सप्तमशतकीयाद् आरभ्य पञ्चदशशतकीयान् लेखान् अध्यगच्छत्, सुपण्डितज्ञानचन्द्रस्य ज्ञानवैभवसाहाय्येन च तदर्थान् व्यजानात् ॥

१८३४ मिते काले कैप्टिन ए. ट्रॉयरमहाशय प्रयागस्थ य स्तम्भलेखम् अपठत तमेव डाक्टरमिलमहोदय पूर्णम् अर्थयत् ॥

१८३७ मिते वर्षे डाक्टरमिल एव स्कन्दगुप्तकारितं 'भीतरी'स्थं लेखम् अपठत। एतद्रूपं यावच्च वलभी-भूपल्लभाना नाना लेखा गृहीतार्था अजायन्त। १८३७-३८ मिते वर्षे जेम्सप्रिंसेप गिरिनारप्रभृतिस्थानस्थान् बहून् गुप्तवंशलेखान् पठितवान्। तदैव गुप्तवंशनृपप्रयुक्ता समस्ता अपि वर्णमाला यथावद् विदितस्वरूपा समपद्यत ॥

गुप्तलिप्यां विदितार्थायां सत्याम् अपि ब्राह्मीलिप्यर्थ-ज्ञानं दुरधिगमम् एव अतिष्ठत्। मरविल्यमजोन्समहोदयस्य प्रयोजनार्थं १७६५ तमे वर्षे अलोरागुहाङ्कितलेखानां मध्ये कतिपयानां लघुलेखानां या प्रतिकृतय निरगच्छत स ता कर्नलमिलपोर्दे प्रहितवान्, असौ च केनचित् संस्कृतपण्डितेन कृतबुद्धिमोह सर्वथा अयथार्थम् अर्थं तासां व्यपद्यत ॥

१८३४-३५ मिते काले जेम्सप्रिंसेप दिल्लीनिवासस्य अशोकस्तम्भलेखस्य

प्रतिकृतिम् आसाद्य तल्लिपि गुप्तवंशनृपप्रयुक्तलिपिम् अनुहरन्तीम् इव निभाल्य सूक्ष्मेक्षिकया तयोः सादृश्यवैसादृश्ये परीक्ष्य च अशोकलिपेः अनेकेषां वर्णानाम् अर्थम् उपलब्धवान् । तदनन्तरं तु स्टोवैनसनकृतः प्रयत्नोऽत्र ततोऽप्यधिकतरसफलः समपद्यत ॥

इति

## ग्रन्थानां, तत्कर्तॄणां, तदालोचकानां, तत्पात्राणां, तदन्तरागतानां नृपाणां प्रसिद्ध भौगोलिक-ऐतिहासिक-स्थानादीनां च

# नामानुक्रमणी

[ पाठकानां सुविधार्थे पृष्ठ संख्या समं पंक्ति संख्याऽपि अत्र दीयते । बिन्दु पूर्वं पृष्ठ संख्या तदनन्तर च पंक्ति संख्या इति बोध्यम्, यथा ६.७=पृष्ठ ६ पंक्ति ७; ८६–९०=पृष्ठ ८६ तथा पृष्ठ ९०; ६५.२१–५=पृष्ठ ६५ आ पंक्ति २१ यावत् पंक्ति २५; २.टि.२=पृष्ठ २ टिप्पणि २; इत्यादि ]

## आ



## इ–ई



## उ



## ऋ



## ऐ–औ



## क

## ग



## च



## छ-ह

ध

## य—व

## श—ह

इति गर्गगोत्र जातेन श्री किशोरीलाल तनूजेन अग्रवालोपाह्वेन
हंसराजेन निर्मितः संस्कृत साहित्येतिहासो नाम ग्रन्थः ॥

—०—